आनन्दो योगक्षेमः । इत्यनेन प्रकारेण । प्राणापानयोः स्पष्टम् । कर्म व्यापाररूपं ब्रह्म । इत्यनेन प्रकारेण । हस्तयोः स्पष्टम् । गतिर्गमनव्यापाररूपं ब्रह्म । इत्यनेन प्रकारेण । पादयोः स्पष्टम् । विमुक्तिर्मलविमोचनव्यापाररूपं ब्रह्म । इत्यनेन प्रकारेण । पायौ गुदेन्द्रिये । इत्यध्यात्मोपासनासमाप्त्यर्थः । मानुषीर्मनुष्यसंबन्धिनीः । समाज्ञाः सम्यगाज्ञा उपासनाः । जानीयादिति शेषः ।

अथ मानुष्युपासनाकथनसमनन्तरम् । दैवीर्देवसंबन्धिनीः । समाज्ञा इत्यनुषङ्गः । कथयामीति शेषः । तृप्तिर्ब्रह्माशनपानजा तुष्टिः । इत्यनेन प्रकारेण । वृष्टौ वर्षकरकासु मेघोदरान्निर्गतासु नीरधारासु । बलं ब्रह्मभूयसामर्थ्यमिभवकारणं सत्त्वम् । इत्यनेन प्रकारेण । विद्युत्यचिरप्रभायाम् । यशः कीर्तिरूपं ब्रह्म । इत्यनेन प्रकारेण । पशुषु गवादिषु । ज्योतिः प्रकाशरूपं ब्रह्म । इत्यनेन प्रकारेण । नक्षत्रेषूडुषु । प्रजातिर्ब्रह्म प्रजननरूपम् । अमृतं ब्रह्म प्रियालिङ्गनदर्शनादिरूपं मैथुनं क्षुद्रसुखरूपम् । आनन्दो ब्रह्म मैथुनक्रियानिवृ(र्वृ)त्तिजं सुखं पुत्रफलम् । इत्यनेन प्रकारेण । उपस्थ उपस्थेन्द्रिये । सर्वं निखिलमाकाशादिवाक्कायजातं ब्रह्म । इत्यनेन प्रकारेण । आकाशे भूताकाशेऽव्याकृते वा । तद्ब्रह्म । प्रतिष्ठा प्रतितिष्ठत्यस्मिन्कार्यकारणजातमिति प्रतिष्ठा । सर्वाधार इत्यर्थः । इत्यनेन प्रकारेण । उपासीतोपासनं कुर्यात् ।

तत्र फलमाह—प्रतिष्ठावानाधारवान्भवति स्पष्टम् । तन्मह इत्युपासीत । महान्भवति । महो व्याहृतिरूपं तेजो वा । महान्सर्वस्मादभ्यधिकः । व्याख्यातमन्यत् । तन्मन इत्युपासीत । मानवान्भवति । मनः संकल्पविकल्पात्मकम् । मानोऽभिमानो मननं वा तद्वान् । अभिमानपक्षेऽखण्डिताभिमान इत्यर्थः । व्याख्यातमन्यत् । तन्नम इत्युपासीत । नमो नमनगुणवत् । व्याख्यातमन्यम् ।

तत्र फलमाह—नम्यन्ते नता भवन्ति । प्राप्नुवन्तीत्यर्थः । अस्मै ब्रह्म नम इत्युपासकाय । कामाः कामनाविषयाः पुत्रादयः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । ब्रह्म परिवृढं वेदरूपं वा । तद्वान्ब्रह्मवान् । परिवृढपक्षे स्वयं परिवृढो भवतीत्यर्थः । व्याख्यातमन्यत् । तद्ब्रह्म ब्रह्मणोऽसङ्गोदासीनस्य । परिमरः । परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्नी रश्मिरिति वायुः परिमरस्तज्जनक आकाशोऽपि परिमरः । अथवा सर्वविनाशकः कालः परिमरः । ब्रह्मणा संबद्धश्च स इत्याकाशः । परिमरगुणविशिष्टः काल एव वा । सर्वोपसंहारकार्ये । इत्यनेन प्रकारेण । उपासीतोपासनं कुर्यात् । पर्येणं सर्वत उपासकं म्रियन्ते विनश्यन्ति । द्विषन्तो द्वेषं

---

१ ख. ° श्योमिरश्मिमिति ।

कुर्वन्तः। सपत्नाः कामादयो बाह्या वा वैरिणः। सपत्नीमातृजा वा। स्वस्य प्रिया अप्यसाधुत्वादज्ञानाद्वा। परि सर्वतः। ये प्रसिद्धाः। अप्रियाः कर्णनेत्रमनोदाहकाः। स्वस्य भ्रातृव्या वैरिणो द्विषन्तोऽपि, अयमस्माकं वैरी, अस्यानिष्टमस्माभिः करणीयमित्युपासके संकल्पयन्त उपासको वैते मयि वैरिण इति संकल्पं करोति येषु वैरमकुर्वाणेष्वपि ते सर्वे विनश्यन्तीत्यर्थः।

एवमानन्दे ब्रह्मण्युपासनान्युक्त्वेदानीं स्थिरचेतसमधिकारिणमुपलभ्य पूर्ववल्ल्युक्तमेवाधिदैवादिभेदरहितमानन्दात्मानमाह—स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवं वित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य। व्याख्यातं पूर्ववल्ल्याम्। इयांस्तु विशेषः— पूर्वं विदेहकैवल्यस्याभिधानात्पञ्चकोशेषु ल्टः प्रयोगः। इदानीं तु जीवन्मुक्तेरभिधानात्तेष्वेव ल्यपः प्रयोगः।

इमान्भूरादींल्लोकान्कर्मफलभूतान्। कामान्नी कामं यथाभिलाषमन्नमदनीयमस्यास्तीति कामान्नी। कामरूपी कामं यथाभिलाषं रूपमस्यास्तीति कामरूपी। अनुसंचरन्नात्मसाक्षात्कारमनु, इमाँल्लोकान्सम्यक्चरन्पर्यटन्मानुषेण शरीरेणाऽऽधिकारिकेण वा। एतद्वक्ष्यमाणं लोकानुग्रहार्थम्। साम समत्वप्रतिपादकं वचनं संसारशूलार्पितान्प्राणिनो निरीक्ष्य भृशं करुणाक्रान्तमना गायन्नत्युन्नताञ्शब्दान्कुर्वन्। दग्धपटन्यायेन *शरीरं गृहीत्वाऽऽस्ते तिष्ठति। अतः संगच्छत हे जना मा संसारशूले पततेति श्रुतेः करुणावत्या मातुरिवाभिप्रायः। हा३वु। हा३वु। हा३वु। लोकत्रयीस्थान्संबोधयति वचनत्रयेण। अहो अहो अहो इति प्लुतिः पदत्रयेऽप्याश्चर्यार्था। अहम्, आनन्दात्माऽसङ्गोदासीनोऽनाद्यनिर्वाच्याविद्यया। अन्नमदनीयमुपभोग्यमित्यर्थः। इदं भूर्लोकस्थान्प्रति। अहमन्नमहमन्नं व्याख्यातम्। अन्तरिक्षस्वर्लोकस्थान्प्रति वचनद्वयम्। अहं व्याख्यातम्। अन्नादोऽन्नमत्तीत्यन्नादो भोक्ता। इदं भूर्लोकस्थान्प्रति। अहमन्नादोऽ३हमन्नादः, व्याख्यातम्। इदमन्तरिक्षस्वर्लोकद्वयस्थान्प्रति।

इदानीं कीर्तिकारित्वमपि स्वस्यैवेति लोकत्रयीस्थान्प्रति पूर्ववत्कथयति—अहꣳ

---

* यथा दग्धोऽपि पटः किंचित्कालपर्यन्तं स्वाकारं न जहाति तथा ज्ञानाग्निदग्धकर्मा वासनाक्षयेण नष्टमपि शरीरं धृत्वा करुणाक्रान्तो गायन्नास्त इति भावः।

---

१ क. घ. अपि सा॰। २ क. ग. ॰नप्रवणः। अ॰।

श्लोककृदह३ श्लोककृदह३ श्लोककृत् । श्लोकः कीर्तिस्तां करोतीति श्लोककृत् । व्याख्यातमन्यत् । पूर्वं वाक्यत्रयेण संबोधनेनान्नान्नादश्लोककृत्त्वमात्मन उक्त्वा लोकत्रयीं प्रति विभागेन कार्यकारणरूपत्वमात्मन आह—अहमानन्दात्मा । अस्मि भवामि । प्रथमजाः प्रथमजो हिरण्यगर्भ इत्यर्थः । ऋता३स्य, ऋतस्य मूर्तामूर्तात्मकस्य सत्यस्य प्रपञ्चस्य कर्ता प्रथमत इत्यर्थः । ऋता इति प्लुतिराश्चर्यार्था ।

ननु—संसारात्पूर्वं देवाः प्रसिद्धा इत्यत आह—पूर्वं प्रथमः । देवेभ्यो विराडवयवभूतेभ्योऽग्न्यादिभ्यः । अमृतस्यामरणधर्मिणो वेदस्य । ना३भायि नाभिर्मध्यम् । वेदरहस्यमित्यर्थः । अत्रापि नकारे प्लुतिराश्चर्यार्था । कार्यकारणहीनोऽसङ्गोदासीनोऽहं वेदगर्भ इत्येवंरूप इति योऽन्नस्य दाताऽऽत्मनो वा सर्वाभिन्नस्य तत्त्वमसीत्यादिवाक्येभ्यो दाता क्षुधार्तेभ्यः संसारतापतप्तेभ्यो वा । मा माम् । अन्नमानन्दात्मरूपं वा ददाति प्रयच्छति । स उक्तो दाता । इदित्थं दानं कुर्वन् । एवमनेन दानेन । आ३वाः, अवोऽवतीत्यर्थः । अकारप्लुतिराश्चर्यार्था । मां सर्वाभिन्नमपि रक्षयतीति ।

ननु—अन्ने दीयमाने कथं भवान्दत्त इत्यत आह—अहमन्नं व्याख्यातम् । ननु—अन्नस्य दानेनाऽऽत्मनो वा त्वद्रक्षणजं सुकृतं भवतु दातर्यस्य तु तस्मिन्नाभिलाषः स तु त्वामन्नमात्मानं वा परस्मै मा प्रयच्छतु । भक्षयतु स्वयं काममन्नं कोऽस्यानर्थ इत्यत आह—अन्नमदनीयं मां तद्रूपमात्मानं वाऽदत्त्वा । अदन्तं भक्षयन्तम् । आ३द्मि, अद्मि भक्षयाम्यन्नभक्षकम् । अकारे प्लुतिराश्चर्यार्था । सर्वाभिन्नोऽप्येवं भक्षयामीति ।

ननु—यथा त्वमेनं भक्षयसि तथा त्वामप्यन्यः । यथा मण्डूकः क्षुद्रं जीवं तं सर्पः सर्पं मकरो विश्वस्य विचित्रशक्तिभूताक्रान्तत्वात्ततो न भवतः प्राप्तिः पुरुषार्थ इत्यत आह—अहमानन्दात्मा विश्वं निखिलं भुवनं भवन्त्यस्मिन्भूतानीति भवनं भवनमेव भुवनम् । अविद्या तत्कार्यतत्संस्कारजातं कार्यकारणरूपमित्यर्थः । अभ्यभवा३मभ्यभवं स्वकीयेनाऽऽनन्दात्मरूपेण देशकालवस्तुपरिच्छेदशून्येन चरमवृत्तिसाक्षात्कारविषयेण निखिलमिदमात्मरूपकारणेन परिभवामि । अतो न मम कश्चन भक्षकः किंत्वहमेव सर्वस्य । ततो न मत्प्राप्तिरपुरुषार्थ इत्यर्थः ।

ननु—सर्वाभेदेऽन्येभ्यः कस्तवैश्यतिशय इत्यत आह—सुवर्न सुवर्णस्तत्समानवर्ण आदित्य इव सुवर्णः । ज्योतीर्ज्योतिः प्रकाशः स्वयंप्रकाशानन्दरूपोऽहं ततो मय्यतिशय इत्यर्थः । इदानीं श्रुतिराह—योऽधिकारी । एवमुक्तप्रकारमानन्दात्मानम् ।

१ क. °भव इ° । २ ख. °त्मस्वरू° । ३ क. ग. °स्त्वति° । ४ ख. °ह—सुवर्णस्त° । ५ ख. °व्यस्त्यति° ।

वेद जानाति साक्षात्करोतीत्यर्थः । सोऽपीमाँल्लोकानित्यादिनोक्तं फलं प्राप्नोतीत्यभिप्रायः । इत्युपनिषत् । व्याख्यातं पूर्ववल्ल्याम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां तृतीये भृगुवल्ल्यध्याये दशमोऽनुवाकः ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ तैत्तिरीयोपनिषद्दीपिकायां तृतीयो भृगुवल्ल्यध्यायः समाप्तः ॥ ३ ॥



समाप्तेयं शंकरानन्दी तैत्तिरीयोपनिषद्दीपिका ॥